न य जीवलिंगसंबन्धदरिसणमभू जओ पुणो सरओ। तल्लिंगदरिसणाओ जीवे संपच्चओ होज्जा ॥२०३०॥
नागमगम्मोऽवि तओ भिज्जइ जं नागमोऽणुमाणाओ। न य कस्सइ पच्चक्खो जीवो जस्सागमो वयणं ॥२०३१॥
जं चागमा विरुद्धा परोप्परमओऽवि संसओ जुत्तो। सव्वप्पमाणविसयाईओ जीवोत्ति ते बुद्धी ॥२०३२॥
गोयम ! पच्चक्खोच्चिय जीवो जं संसयाइविन्नाणं। पच्चक्खं च न सज्झं जह सुहदुक्खं सदेहम्मि ॥२०३३॥
कयवं करेमि काहं चाहमहंपच्चया इमाओ य। अप्पा सप्पच्चक्खो तिकालकज्जावएसाओ ॥२०३४॥
कह पडिवण्णमहंतिय किमत्थि नत्थित्ति संसओ कह णु ?। सइ संसयम्मि वाऽयं अस्साहंपच्चओ जुत्तो ।२०३५।
जइ नत्थि संसइच्चिय किमत्थि नत्थित्ति संसओ कस्स ?। संसइए व सरूवे गोयम ! किमसंसयं होज्जा ? ॥२०३६॥
गुणपच्चक्खत्तणओ गुणीऽवि जीवो घडो व्व पच्चक्खो। घडओऽवि घेप्पइ गुणी गुणमेत्तग्गहणओ जम्हा ।२०३७।
अन्नोऽणन्नो व गुणी होज्ज ? गुणेहिं जइ नाम सोऽणन्नो। ननु गुणमेत्तग्गहणे घेप्पइ जीवो गुणी सक्खं ॥२०३८॥
अह अन्नो तो एवं गुणिणो न घडादओऽवि पच्चक्खा। गुणमेत्तग्गहणाओ जीवम्मि कओ वियारोऽयं ? ।२०३९।
अह मन्नसि अत्थि गुणी न तदवत्थंतरं तओ किंतु। देहे नाणाइगुणा सोच्चिय तेसिं गुणी जुत्तो ॥२०४०॥
नाणादओ न देहस्सऽमुत्तिमत्ताइओ घडस्सेव। तम्हा नाणाइगुणा जस्स स देहाहिओ जीवो ॥२०४१॥
इय तुह देसेणायं पच्चक्खो सव्वहा महं जीवो। अविहयनाणत्तणओ तुह विण्णाणं व पडिवज्ज ॥२०४२॥
एवंचिय परदेहेऽणुमाणओ गेण्ह जीवमत्थित्ति। अणुवित्तिनिवित्तीओ विन्नाणमयं सरूवे व्व ॥२०४३॥

जं न न लिंगेहिं समं मन्नसि लिंगी जओ पुरा गहिओ। संगं ससेण व समं ण लिंगओ तोऽणुमेओ सो ॥२०४४॥
सोऽणेगंतो जम्हा लिंगेहिं समं न दिट्ठपुव्वोवि। गहलिंगदरिसणाओ गहोऽणुमेओ सरीरम्मि ॥२०४५॥

'किं मन्ने'इत्यादि ॥ हे आयुष्मन्! गौतम! 'किं' कस्मात् मन्यसे अस्ति जीव उताहोश्विन्नास्तीति, एवं संशयस्तव, त्यज्यतां चायमधुना मत्संप्राप्त्या, अनुचितत्वात्, शेषमिथ्यात्वमलकलङ्कवत्, अथवा किमस्ति जीव उताहोश्विन्नास्तीति, एवं 'मन्ने'ति मन्यते भवान्, संशयः 'तुज्झं'ति अयं तव संशयः, कुतः पुनः?, उभयहेतुसद्भावाद्, विरुद्धवेदपदश्रवणादित्यभिप्रायः, ततः किमत आह–'वेदपदानां च' वेदवाक्यानां च 'अर्थं' सद्भावं 'न जानासि' नावबुद्ध्यसे, श्रौत्रेण न्यायेन प्रवृत्तेः, तेषां चायमर्थो–यो मया निरूप्यत इति गाथार्थः ॥ तत्र नास्तित्वहेतवस्तावदमी–'जीवे'इत्यादि ॥ जीवति जीविष्यति जीवितवान् वा जीवस्तस्मिन् जीवे विषयभूते भवतः सन्देहः, किल प्रत्यक्षं यस्मान्न गृह्यते, घटवदिति व्यतिरेकी, प्रत्यक्षेण चाग्रहणं तस्य सत्संप्रयोगजत्वात्, तस्य नात्यन्तासत्त्वेनाप्रत्यक्षत्वाद्, अतः पश्चार्द्धावतारः–'अच्चंतापच्चक्खं च नत्थि लोए खपुप्फं व'त्ति नास्ति जीवः अत्यन्ताप्रत्यक्षत्वात् खपुष्पवत्, हेतुविशेषणं किमिति चेद्धेतोरप्रामाणिकत्वनिषेधार्थं, तथा ह्यप्रत्यक्षा भवन्त्यणवो, न च न सन्ति, द्व्यणुकादिकार्यगम्यत्वात्, व्यतिरेकेण त्वेत एव, घटो वेति गाथार्थः ॥२०२८॥ एवं च मन्यसे–'न य सो'–इत्यादि ॥ न चासौ जीवोऽनुमानव्यापारगम्यः, तस्यापि प्रत्यक्षपूर्वकत्वात्, कुतः? इत्याह–लीनमर्थं गमयतीति लिङ्गं, लिङ्गमस्यास्तीति लिङ्गी, लिङ्गं च लिङ्गी च लिङ्गलिङ्गिनौ तयोः पूर्वोपलब्धसम्बन्धस्मरणात्, तथाहि–प्राग् महानसादावग्निधूमयोरन्वयव्यतिरेकवन्तमविनाभावमध्यक्षतो गृहीत्वा तत उत्तरकालमटन् क्वचिन्निकुञ्जादावग्निं प्रत्येति, यत्र यत्राहं धूममद्राक्षं तत्र तत्राग्निर्यथा महानसादौ, तथा चेहाहं, तस्मादत्राग्निना भाव्यं,

व्यतिरेकेणोदकभाजनं, अगृहीतसम्बन्धस्य नालिकेरद्वीपनिवासिनस्तद्दर्शनेऽपि तदप्रतिपत्तेरस्य तत्पूर्वकतेति गाथार्थः ॥२०२९॥ एवं चास्मानाशङ्कसे—प्रकृतेऽप्येवमेव भविष्यतीति, तन्न, यतः—'न य'इत्यादि ॥ न च जीवतल्लिङ्गयोः सम्बन्धदर्शनं अविनाभाव-ग्रहणमभूत् कस्यचिद्विमलधियोऽपि, यतस्तल्लिङ्गदर्शनाद् यस्माज्जीवाविनाभूतकार्यग्रहणात्सकाशात् पुनः स्मरन्तः सतो लिंग-लिङ्गिसम्बन्धं जीवेऽग्निकल्पे संप्रत्ययो भवेत्, तस्मात् मां अमुमस्मादनुमंस्यथ इति, एवं चाशङ्कसे, अथ वक्ष्यथ—सामान्यतो दृष्टादनुमानादात्माऽस्तित्वं सेत्स्यति चन्द्रादित्यादिगतिवद्, गतिमानादित्यो देशान्तरप्राप्तेर्देवदत्तवदिति, एतदपि सव्याजं, देवदत्ते दृष्टान्तधर्मिण्यध्यक्षतो गतिमत्त्वमालोक्य ततः सूर्ये सामान्येन ग्रहणात्, न चैवमत्रान्यत्राध्यक्षतो जीवत्वं गृहीत्वा क्वचित्सामान्येन ग्रहणं लभ्यते, यन्नास्ति तन्नास्त्येवेति किं तेनेति गाथार्थः ॥२०३०॥ एवं चाशङ्कसे—आगमात् तदवगमिष्यामः, तदपि न, यतः—'नागमे'त्यादि ॥ नागमगम्योऽप्यसौ—जीवः, किं मनोरथैः ?, नेत्याह—'यत्' यस्मान्नागमोऽनुमानाद् भिद्यते, घटसन्निधौ सकृद् घटप्रयोगोपलब्धावुत्तरकालं घटमानयेत्युक्तेऽन्वयव्यतिरेकमुखेन घटानुमितिप्रवृत्तेः, न चेत्थमात्मशब्दः शरीरादन्यत्र प्रयुज्य-मानो दृष्टो यमात्मशब्दात्प्रतिपद्येमहीति, विवक्षान्वयव्यतिरेकानुविधायित्वेन च कार्यत्वाच्छब्दोऽनुमानान्न भिद्यते, संबद्धादन्यतः प्रतिपत्तेश्च, अथ भवतां मतिर्लिङ्गिनि प्रतिबद्धोऽपि ध्वनिर्न लिङ्गं, अलिङ्गाच्च या प्रतिपत्तिः स खल्वागम इति, उच्यते, प्रतिपन्नं नामेदं मया, तथाऽपि दृष्ट एवार्थे शब्दानां प्रामाण्यं योक्ष्यति, यथा नदीतीरे गुडशकटं पर्यस्तमिति, अथ वासनामात्रावष्टम्भे-नोच्यते भवद्भिः अस्त्यसौ, यथादृष्टेऽप्यर्थे ध्वनयः प्रमाणपदवीमवतरिष्यन्ति, उच्यते, न च कस्यचित् प्रत्यक्षो जीवो यस्य सम्बन्धि वचनमागमः, तस्याविद्यापारतन्त्र्येणातीन्द्रियवस्तुदृष्टत्वायोगादिति गाथार्थः ॥२०३१॥ एवं च मन्यसे—'जं चे'त्यादि ॥

यस्माच्चागमाः सर्व एव परस्परविरोधिनः अतोऽपि संशयो मे युक्तः, यथाहुरेके—"एतावानेव पुरुषो, यावानिन्द्रियगोचरः। भद्रे ! वृकपदं पश्य, यद्वदन्त्यबहुश्रुताः ॥१॥" तथाऽन्ये प्राहुः—"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति, न प्रेत्यसञ्ज्ञाऽस्ति', तथा 'न रूपं भिक्षवः पुद्गलः" इति। तथाऽस्तित्वप्रतिपत्तयः—"न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इति, "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति, अस्ति पुरुषः अकर्त्ता निर्गुणो भोक्ता चिद्रूप इत्यतोऽविश्वासः, एवं चाशङ्कसे—उपमानगम्योऽपि न भवति, यतस्तस्येदं लक्षणं—सादृश्यमन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्येति, तदगम्यत्वं च तस्य सदृशविषयीभूतादर्शनेनान्यत्र प्रहीति(तीत्य)हेतुत्वात्, न चेहान्यः कश्चित् त्रैलोक्येऽप्यात्मानुकारी भावोऽस्ति यद्दर्शनादात्माऽभ्युपगम्यमानवृत्तिः स्यात्, कालाकाशदिगादीति चेत्, न, तेषामप्येतदंघ्रिवद्धत्वात्, एवं चाशङ्कसे—न पुनरर्थापत्तिसाध्योऽप्यसौ, न को हि नाम दृष्टः श्रुतो वाऽर्थस्तमन्तरेण न सिद्धः?, अग्नेर्हि दाहकशक्तिपरिकल्पनं न्याय्यं, तामन्तरेण दारुणि भस्मानुपलम्भप्रसङ्गादित्येवमादि, अतः 'सव्वप्पमाणविसयातीतो जीवः' भावोपलम्भकप्रमाणपञ्चकविषयातीतत्वेन प्रतिषेधसाधकाभावाख्यषष्ठप्रमाणविषयीकृतत्वादिति, एवं ते—तव 'बुद्धिः' मतिरिति पूर्वपक्षः॥ तदेवं तत्संशयमाज्ञाय छिन्दन्नाह— 'गोयमे'त्यादि॥ हे आयुष्मन्! गौतम! प्रत्यक्ष एवायमात्मा, किमत्रान्येन साधनेन?, कथमित्यत आह—यदेतत्संशयादिविज्ञानं, एतत् ननु भवतोऽपि प्रत्यक्षं, स्वसंवेदनसिद्धत्वात्, आत्मनश्च ज्ञानानन्यत्वात्, अन्यत्वे च विवक्षितप्रमातुरिव भवतोऽपि यथाविवक्षितेऽपरिच्छेदप्रसङ्गात्, प्रत्यक्षोऽपि साध्य इति चेदुच्यते—प्रत्यक्षं च न साध्यं, प्रमाणान्तरेणेत्युत्सर्गेण, यथा शरीरे सुखदुःखादि, एतदुक्तं भवति—यथा सुखदुःखादय औदयिका अभिन्नाधिकरणा ज्ञाने गृह्यमाणाः प्रत्यक्षसिद्धत्वान्न साध्याः, एवमा-

त्माऽप्यभिन्नाधिकरणो ज्ञानग्रहणेन गृह्यमाणः प्रत्यक्षत्वान्न साध्य इति गाथार्थः ॥२०३३॥ इतश्च प्रत्यक्ष इत्यत आह–'कयव'मित्यादि ॥ आत्मा स्वप्रत्यक्षः, किंवदित्याह–त्रैकाल्यकार्यव्यपदेशवत्, अस्य व्याख्यानं–कृतवान् करोमि करिष्ये चाहमिति, एवं उक्तवानहं ब्रवीम्यहं वक्ष्याम्यहं, एवं ज्ञातवानहं जानेऽहं ज्ञास्येऽहमिति, न चायं त्रिकालव्यपदेशहेतुरहंप्रत्यय आनुमानिको, नाप्यागमिकः, किं तर्हि ?, स्वप्रत्यक्ष इत्यत एनमेवात्मानं प्रतिपद्यस्व, न चायं घटादौ, अथवा 'अहंपच्चयादिमायो'त्ति एवमहंप्रत्ययाद्यनुमितश्च–परिच्छिन्नश्च, न केवलं ज्ञानानन्यत्वेन प्रत्यक्ष इति, इह च प्रत्यक्षस्यापि प्रत्यक्षत्वसाध्यतायां न कश्चिद्दोषः, तथा दृष्टत्वात्, अथवाऽऽत्मा स्वप्रत्यक्षस्त्रैकालिककार्यव्यपदेशवत्त्वात्, तदेव कथमित्यत आह–कृतवान् करोमि करिष्ये चाहमित्येवं अहंप्रत्ययादिमत्त्वात्, प्रयोगः–प्रत्यक्ष एव जीवः, स्वरूपेण ग्रहणाद्, घटवत्, यश्चायं प्रत्ययः स द्वेधा–आन्तरो बाह्यश्च, आन्तर आत्मसंयोगमात्रजन्यो, यथाऽहं, बाह्यस्तु घटः, अत्रात्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेत्यतोऽस्त्यात्मा, स चानुभविक एवेति, अपिचाहं विजानामीति क्रिया कर्त्तारमालम्बते, एतदुक्तं भवति–परिच्छेदक्रियानिष्पादनेन अहं जानामीति प्रत्ययेन आत्मा विषयीक्रियते, आह–नैवं, अनेकान्ताद्, देहालम्बनत्वादस्य, तथाहि–अहं गुरुरहं गौरोऽहं कृश इति प्रत्ययोऽनुभूयते, उच्यते, न, अस्य प्रत्ययाभासत्वाद्, गुरु मे शरीरमित्यनेन बाधितत्वात्, यश्चास्य प्रमाणसिद्धस्याहमितिप्रत्ययालम्ब्यः स आत्मेति गाथार्थः ॥२०३४॥ अपिच–'कह'मित्यादि। 'कथं' केन प्रकारेण प्रतिपन्नमेतत् यदुत अहमिति, तथा किमस्मि नास्मीति संशयः कथं नु ?, केन प्रकारेण, विरोधात् हेत्वभावाद्वा, सति वा संशये कस्याहंप्रत्ययो 'युक्तः' अनुरूपो ?, नायं गतासौ देहे इति गाथार्थः ॥२०३५॥ तथा–'जती' त्यादि ॥ यदि नास्त्येव संशयी–जीवस्तन्नन्वयमेवं कस्य संशयो ?, नैव कस्यचित्, कस्यचित्तु संशयस्य विज्ञानाख्यगुणविशेषत्वात् तस्य चापद्रव्यत्वायो-

गात्, तस्मात्तत्सत्तावलम्बिनाऽसावभ्युपगन्तव्य इति, न चायं स्थाणोः, अनुरूपधर्मिधर्मत्वाद्बोधरूपत्वाद्वेति, अथवा यदि नत्थि संसइच्चिय तो संसइते सव्वे गौतम ! तवान्यत् किमसंदिग्धं स्याद् ? येन कर्मादि त्वस्तीत्यवसीयते ?, ततश्चैवमहंप्रत्ययविशिष्टत्वेन स्वप्रत्यक्षमात्मानं निह्नुवानस्य नास्ति जीव इति प्रत्यक्षविरुद्धो नाम पक्षाभासो जायते, यथाऽश्रावणः शब्द इति । तथा भाविनीमनुमानसिद्धिमङ्गीकृत्यानुमानविरोधोऽपि, यथा नित्यः शब्द इति, अत्रानित्यः शब्दः कृतकत्वाद् घटवत् २, तथाऽहमस्मि संशयीति प्रागभ्युपगम्योत्तरत्र नास्तीति प्रतिजानानस्य पूर्वाभ्युपगमबाधा, यथा साङ्ख्यस्य सत्कार्यं जायत इत्यभ्युपगम्यासज्जायत इति प्रतिजानतः ३, तथा गोपालाङ्गनादि प्रति सिद्धमात्मानं न्यत्कुर्वतो लोकविरोधोऽप्यचन्द्रः शशीति यथा ४ अहं नाहं चेति गदतः स्ववचनव्याहतिरपि माता वन्ध्येति यथा ५ । एवमस्मिन् पक्षे प्रत्यक्षादिबाधिते हेतुरप्यपक्षधर्मतयाऽसिद्धः, अनैकान्तिकोऽपि, हिमवत्पलाग्रपरिमाणादावपि वृत्तेः, तथाऽक्षकरणाधिष्ठातृकात्मनि विपक्षेऽत्यन्तानुपलब्धेर्लेशतो वृत्तेर्विरुद्धोऽपि हेतुरिति गाथार्थः ॥ २०३६॥ तदेवमस्य साक्षादध्यक्षतामभिधाय पुनरपि प्रकारान्तरेणाह–'गुणे'त्यादि पुव्वद्धं, प्रयोगः–प्रत्यक्षस्तवायमात्मा गुणप्रत्यक्षत्वात् व्यतिरेकोपन्यस्तघटवत्, तत्रैतत्स्याद्–अनैकान्तिको हेतुर्गुणप्रत्यक्षत्वेऽपि कदाचिद् गुणिनोऽप्रत्यक्षत्वात्, तद्यथाऽऽकाशगुणः शब्द इत्यत्र शब्दः प्रत्यक्षो नाकाशमिति, उच्यते–नाकाशगुणः शब्दः, ऐन्द्रियत्वाद्रूपादिवत्, कारणस्वरूपानुविधायिकत्वाच्च कार्यस्य नाकाशगुण इति, अतो गुणप्रत्यक्षतया गुणिनं प्रतिपद्यस्व, स्याद् अतिस्तोकं ग्रहणमिति तन्न, भवताऽपि घटो गुणी 'गृह्यते' चक्षुषा विषयीक्रियते, यस्माद् गुणमात्रग्रहणादेव, अपिशब्दस्यावधारणार्थत्वाद्गन्धादिपरिहारेणोद्घातादिग्रहणादित्यर्थः, किं कारणं ?, अर्वाग्दर्शित्वाद्भवत इत्यतः कोऽयमकाण्ड एव सर्वात्मनाऽऽत्मग्रहणाभिलाषस्तवेति ।' तथा च–'अन्नो' इत्यादि ॥ प्रयोगः–यो यदनर्थान्तरः

स तद्ग्रहे गृह्यते, तद्यथा—वाससि राग इति गाथार्थः ॥२०३८॥ 'अहे'त्यादि ॥ अथाऽन्यः तत एवं कृत्वाऽन्येऽपि घटादयो गुणिनो न प्रत्यक्षाः, गुणमात्रग्रहणाद्, अतो जीवे तपस्विनि केवले कोऽयं विचारः? केयं तव नास्तित्वविवक्षेति, तस्मात्प्रत्यक्षो जीवः गुणद्वारेण ग्रहणात्, दृष्टान्तधर्मिवत्, साध्यविपर्यये दृष्टान्तधर्मिणोऽपि ग्रहणानुपपत्तिर्बाधकं, न च प्रतिज्ञार्थैकदेशो हेतुः, साधनहेतुवैपरीत्येनानुपलब्धिवल्लक्षणहेतुत्वात्, तत्रैतत्स्याद् अपद्रव्यो हि गुणो न भवतीति तद्ग्रहणानुपपत्तिद्वारेण घटादिग्रह इति, उच्यते, नात्मन्यप्येवमिति न व्यक्तमीश्वरशासनमिति गाथार्थः ॥२०३९॥ तस्मादभिन्नगुणप्रत्यक्षत्वेन साक्षाद् गुणी गृह्यत इति स्थितम्—'अहे'त्यादि ॥ अथ गुणी, न तं प्रत्याचक्ष्महे, किन्तु देहार्थान्तरोऽसौ नेति ब्रूमः, किमिति?, यतः देहे ज्ञानादयो गुणाः समनुभूयन्ते, ततः स एव तेषां गुणी युक्तः स्याद्, देहाश्रया ज्ञानादयः, तत्रैवोपलब्धेर्गौरतादिवदिति गाथार्थः ॥२०४०॥ उच्यते—'नाणे'त्यादि ॥ यद्यत् मूर्त्तं चाक्षुषं च न तस्य ज्ञानादयो, यथा घटस्य, तथा च देहः, आत्मा चामूर्त्तो, मूर्त्तिमत्त्वस्य पररूपत्वात्, तस्माद् यस्य धर्मिणः सम्बन्धितया ज्ञानादयो वर्त्तन्ते स देहातिरिक्तो जीव इति भावार्थः, आह—'नाणादयो न देहस्से' ति प्रत्यक्षविरुद्धं, यथा—अश्रावणः शब्दः, ऐन्द्रियकत्वाद्देहवत्, उच्यते, न अनुमानेन परिकरितत्वात्, तच्चेदं—देहेन्द्रियातिरिक्त आत्मा तदुपरमेऽपि तदुपलब्धार्थानुस्मरणाभ्रंशात्, पञ्चवातायनोपलब्धार्थानुस्मर्त्तृदेवदत्तवत् गृहगवाक्षव्यतिरिक्त इति वायुभूतिप्रश्नेऽपि वक्ष्याम इति गाथार्थः ॥४१॥ उपसंजिहीर्षुराह—'इय'इत्यादि ॥ देशप्रत्यक्षस्तेऽयमर्वाग्दर्शित्वेन मर्यादाग्राहित्वाद् घट इव, देशप्रत्यक्षता च वस्तुनोऽनन्तपर्यायप्रमाणत्वात्, भवदादेश्च छद्मस्थत्वेन तदविषयत्वात्, विज्ञानदेशप्रकाशात्मकत्वात्प्रदीपघटैकदेशप्रकाशवत्, मम तु सर्वथा प्रत्यक्षो, विहितानन्तज्ञानत्वाद्भवद्विज्ञानवत्, यथेह भवद्विज्ञानमतीन्द्रियमशेषमहमुपलभे तथा भवज्जीवमपीति तस्मात्प्रतिपद्यस्व तमिति गाथार्थः ॥२०४२॥

परदेहे कथमित्यत आह–'एव'मित्यादि ॥ 'एवमेव' आत्मशरीर इव परशरीरेऽपि गृहाण जीवं यदुतास्तीति, किंविशिष्टं? विन्नाण-मयं, किं प्रत्यक्षतो ?, नेत्याह–अनुमानतः, तथाहि- परदेहेऽप्यस्ति जीवः प्रवृत्तिनिवृत्तिसदसद्भावाद्धिताहितप्रवृत्तिनिवृत्तिदर्शनात्, स्वरूपं स्वात्मनीवेत्येवमादि स्वधियाऽनुसर्त्तव्यं, व्यतिरेकेण गतासुदेहादाविति गाथार्थः ॥२०४३॥ अनुमानपूर्वपक्षं प्रत्यनुभाषयन्नाह– 'जं चे'त्यादि **'जं च मन्नसि न लिंगेण मोऽणुमेयो'** त्ति, केन निबन्धनेन ?, उच्यते **'न लिंगेहिं समं जओ लिंगी पुरा गहिओ'**, साधर्म्यदृष्टान्तमाह–संगं ससेण व सम'न्ति । तत्र प्रतिविधीयते–**'सोऽणेगन्तो'**इत्यादि ॥ असावनेकान्तो यदुत लिङ्ग-लिङ्गिनोः सम्बन्धग्रहे उत्तरकालं तल्लिङ्गदर्शनात्तदनुमितिरिति, किं वाङ्मात्रेण ?, नेत्याह–'जम्हा गहोऽणुमेयो सरीरंमि'त्ति, अ-स्मिन् शरीरे ग्रहस्तल्लिङ्गदर्शनाद्, ग्रहलिङ्गाङ्गधूननविकटगमनभ्रूत्क्षेपकृतोपहाराद्युपलब्धेः सकाशात्, किंविशिष्टः ? इत्याह–लिङ्गैः सार्द्धमदृष्टपूर्वोऽपि अविनाभावग्रहणमन्तरेणापीत्यर्थः ॥ एवं ग्रहमिवात्मानमनुमास्याम इति को निवारयिता ?, वायुनाऽस्मिन्नेते भव-न्तीति वक्केति चेत्, न, वातिकभयात् तद्गमने शालशिखरादिभङ्गदर्शनं, एवं वक्तुमयुज्यमानत्वात्, यद्येवं ततः शशाख्यलिङ्गोपलक्षितं शशविषाणमप्यनुमेयं सम्बन्धाग्रहाविशेषाद्, उच्यते, अत एवानेकान्त एकस्यानुमीयमानत्वात् अपरस्य त्वननुमीयमानत्वादिति गाथार्थः ॥२०४४-४५॥ इदं चानुमानम्–

**देहस्सऽत्थि विहाया पइनिययागारओ घडस्सेव । अक्खाणं च करणओ दंडाईणं कुलालो व्व ॥२०४६॥**

**अत्थिंदियविसयाणं आयाणादेयभावओऽवस्सं । कम्मार इवादाया लोए संडासलोहाणं ॥२०४७॥**

**भोत्ता देहाईणं भोज्जत्तणओ नरोव्व भत्तस्स । संघायाइत्तणओ अत्थि य अत्थी घरस्सेव ॥२०४८॥**

जो कत्ताइ स जीवो सज्झविरुद्धोत्ति ते मई होज्जा । मुत्ताइपसंगाओ तं न संसारिणोऽदोसो ॥२०४९॥
अत्थिच्चिय ते जीवो संसयओ सोम्म ! थाणुपुरिसो व्व । जं संदिद्धं गोयम ! तं तत्थऽन्नत्थ वऽत्थि धुवं ॥२०५०॥
एवं नाम विसाणं खरस्स पत्तं न तं खरे चेव । अन्नत्थ तदत्थि च्चिय एवं विवरीयगाहेऽवि ॥२०५१॥
अत्थि अजीवविवक्खो पडिसेहाओ घडोऽघडस्सेव । नत्थि घडोत्ति व जीवत्थित्तपरो नत्थिसद्दोऽयं ॥२०५२॥
असओ नत्थि निसेहो संजोगाइपडिसेहओ सिद्धं । संजोगाइचउक्कंपि सिद्धमत्थंतरे निययं ॥२०५३॥
जीवोत्ति सत्थयमिणं सुद्धत्तणओ घडाभिहाणं व । जेणऽत्थेण सयत्थं सो जीवो अह मई होज्ज ॥२०५४॥
अत्थो देहोच्चिय से तं नो पज्जायवयणभेआओ । नाणाइगुणो य जओ भणिओ जीवो न देहोत्ति ॥२०५५॥

'देह' इत्यादि ॥ यदादिमत् प्रतिनियताकारश्च तद्विद्यमानकर्तृकं दृष्टं, यथा घटस्तथा च देहस्तस्मात्तथेति, व्यतिरेकेणा-भ्रादिविकारादयः, किं देहस्यैव ?, नेत्याह—'अक्षाणां च' इन्द्रियाणां च, तथा च विद्यमानाधिष्ठातृकाणीन्द्रियाणि करण-त्वाद्विवक्षितदण्डादिवद्, व्यतिरेकेण त्वाकाशमिति गाथार्थः ॥२०४६॥ तथा—'अत्थी'त्यादि ॥ अस्त्यत्रास्यमादाता इत्यत्र सम्बन्धः, इन्द्रियस्य विषयस्य चादानादेयभावात्, लोए कम्मार इव संडासलोहाणं करणकम्माणत्ति, यत्र अविद्यमानादातृकं न तत्र तद्भावो, यथा खे इति गाथार्थः ॥२०४७॥ 'भोत्ता' इत्यादि ॥ देहादीनां भोक्ता विद्यते, भोग्यत्वाद्भक्तस्येव, व्यतिरेकेण न किञ्चित्, 'अत्थि य अत्थी' ति विद्यमानस्वामिकमिदं शरीरं, 'संघातादित्तणओ'त्ति संघातत्वाद् गृहवत्, व्यतिरेकेण खरविषा-णं, आदिशब्दादस्यामेव प्रतिज्ञायां मूर्तिमत्त्वादैन्द्रियकत्वाचाक्षुषत्वादित्यादयोऽपि हेतवो दृश्याः, किंवत् ?, कुलालवदिति गाथार्थः

॥२०४८॥ मूलतः फलमादर्शयन्नाह—'जो' इत्यादि ॥ यश्च कर्त्ता देहस्य, आदिशब्दाच्चादानादि परिगृह्यते, स जीवो वर्त्तते, अत्र परमतमाह—'सज्झविरुद्धोत्ति ते मती होज्ज' त्ति, इत्येवं मतिर्भवेद् भवतो यदुतायं हेतुः साध्यस्य विरुद्धः साध्यविरुद्धः, किमुक्तं भवति ?—विद्यमानस्वामिकाख्यसाध्यधर्मविशेषविपरीतसाधनः, कुतः ? इत्यत आह—'मूर्त्तादिप्रसङ्गात्' मूर्त्तिमत्त्वसंघातानित्यादिमत्त्वप्राप्तेर्दृष्टान्तसामर्थ्यात्, अत्रोत्तरमाह—'तन्नो' त्ति तदेतन्न भवति, यतोऽयं मूर्तिमत्त्वादिप्रसङ्गः संसारिणः अष्टविधकर्ममलपटलाच्छादितस्य जन्तोः 'अदोषः' नापराधः, इष्टत्वात्, इष्टसाधने च विरुद्धो भवतीति यदि परं भवत इदमस्माभिराकर्णितमिति गाथार्थः ।२०४९॥ इतश्चेत्याह—'अत्थी'त्यादि ॥ अस्त्येव तत्र जीवः हे सौम्य ! 'संशयतः' संशयसद्भावात्, इह यत्र २ संदेहस्तत्तदस्ति, यथा स्थाणुपुरुषौ, यथेह स्थाणुपुरुषयोरूर्ध्वतारोहपरिणाहादिसामान्यप्रत्यक्षतायां चलनवयोनिलयनादिविशेषाप्रत्यक्षतायां चोभयविशेषस्मृतौ च सत्यामेकतरविशेषोपलिप्सोः किमिदमिति विमर्षः संशयः, तथाऽऽत्मशरीरयोरपि प्रागुपलब्धसामान्यविशेषस्य तयोः सामान्यप्रत्यक्षतायां विशेषानुस्मृतौ च सत्यामेकतरविशेषोपलिप्सोः किमयमात्मा शरीरमात्रमिति विमर्षः खलूभयविषयो नात्मशरीरयोरेकतराभाव इत्यस्ति जीवः, तत्रैतत्स्याद्—एकतराभावेऽपि संशयो दृष्टस्तद्यथा—स्थाणुमात्र एवेति किमयं स्थाणुरुत पुरुषः ? इति, न च तदा तत्र पुरुषोऽस्तीति, अलौकिकमेतत्, इदमाशङ्क्याह— गौतम ! यद्वस्तु संदिग्धं यदधिकरणस्ते संशयस्तद्वस्तु तत्र वा प्रदेशेऽन्यत्र वा 'अस्ति' विद्यते 'ध्रुवं' अवश्यमित्येतदेव लौकिकं, एतदुक्तं भवति—न ब्रूमस्तत्रैवोभयमवश्यं, अपि तु तत्र वाऽन्यत्र वा विद्यमानयोरेव तयोः संशयजनकत्वं, नाविद्यमानयोः, एवमात्मशरीरयोरपीति कोऽत्र तेऽपरितोष इति गाथार्थः ॥२०५०॥ लब्धावसरः प्राह—'एव' मित्यादि ॥ एवमिति यदि यत्संशयनिमित्तं तदस्तीत्युपपाद्यते नामेति निपातः, ततः खर-

स्य विषाणमस्तीति प्राप्तं, तत्संशयसद्भावात्, संशयनिमित्तस्य चास्तित्वात्, जीववत्, उच्यते, उक्तमत्र यदुत विद्यमान एव संशयो भवति, नाविद्यमाने, खरस्य विषाणं खरविषाणमिति कोऽर्थः ? इत्यत आह– 'तं खरे चेव' त्ति खर एव न तत् विषाणं, किन्तु 'अन्नत्थ' गवादौ तदस्त्येव, प्रत्यक्षत्वात्, एतदुक्तं भवति–खरगोमस्तकयोर्विषाणस्याभावनिश्चयान्न संशयोऽयुक्त इति, किमुच्यते–एवं नाम विसाणं खरस्स पत्तंति ऊर्ध्वतासामान्यं, उभयनिश्चयाभावान्न्याय्यः संशय इत्यतः स्थितिमेतद् अत्थिच्चिय ते जीवो इत्येवमादीनि । तदेवं संशयोत्पत्त्याऽस्तित्वं प्रसाध्य विपर्ययोत्पत्त्याऽपि प्रसाधयन्नाह–'एवं विवरीतगाहेवि' त्ति एवं विपर्यस्तप्रतिपत्तावपि न्यायो बोद्धव्यः, तथाहि–यथा विद्यमान एव पुरुषे स्थाणौ पुरुषाभिमानः, तथा बुध्यस्व योऽयं भवतः शरीर एवात्माभिमानो नासावात्मानमन्तरेणेत्यतोऽस्त्यात्मेति, नेदं शरीरमात्रमिति गाथार्थः ॥२०५१॥ अपि चायुष्मन् !— 'अत्थी'त्याद्यक्षरार्थः स्पष्टः । प्रतिपक्षवानयमजीवः व्युत्पत्तिमच्छुद्धपदप्रतिषेधात्, यत्र व्युत्पत्तिमतः शुद्धपदस्य च प्रतिषेधोऽनुश्रूयते प्रतिपक्षवांस्तद्यथाऽघटः, अघटो हि व्युत्पत्तिमच्छुद्धपदप्रतिषेधाद् घटप्रतिपक्षवान्, एवमजीवोऽपि जीवप्रतिपक्षवानिति, व्यतिरेकेण अखरविषाणादि, अखरविषाणप्रतिपक्षो हि खरविषाणं, तच्च सामासिकत्वान्न शुद्धपदमिति । 'नत्थी'त्यादि पच्छद्धाक्षरार्थः स्पष्टः, प्रयोगः–प्रतिपक्षसाधको नास्त्यात्मेति शब्दः, सतो निषेधात् नास्ति घट इति शब्दवत्, यतो निषेधेन प्रतिपक्षसाधनव्याप्तेः स्वभावहेतुप्रयोगः, व्यतिरेकेण शुकशुके इति गाथार्थः ॥ २०५२ ॥ स्यादनैकान्तिको हेतुः, असतोऽपि निषेधप्रवृत्तेः, उच्यते– 'असतो' इत्यादि ॥ यद्वाऽन्य एवायं प्रयोगार्थोऽभिप्रेतो भाष्यकारस्य, तत्र 'असतः' अविद्यमानस्य नास्ति प्रतिषेधः–न संभवत्यभावाभिधानं, अपि त्विदं न्यायतः सिद्धं यदुत सतो निषेधः, युक्तिमाह–'संजोगादिपडिसेहओ' त्ति संयोगादिमात्रप्रति-

पेधात्, अस्य भावना—इह यन्नास्तीत्युच्यते तस्य विद्यमानस्य सतः संयोगमात्रं निषिध्यते, न पुनः सत्ता, नास्ति गृहे देवदत्त इव, एतदुक्तं भवति—यत्र क्वचन विद्यमानयोरेव तयोः संयोगमात्रं प्रतिषिध्यते, संयोगप्रतिषेधेनेति। आदिशब्दात् 'समवायपडिसेहओ'त्ति, इह यत्प्रतिषिध्यते तस्य विद्यमानस्य सतः समवायमात्रं निषिध्यते, न सर्वथाऽस्तित्वं, तद्यथा—नास्ति खरमस्तके विषाणं, एतदुक्तं भवति—यत्र क्वचन विद्यमानं विषाणं खमस्तके समवायवृत्त्या प्रतिषिध्यते समवायप्रतिषेधेनेति। तथा सामन्नपडिसेहओत्ति, अत्रोदाहरणं—नास्त्यन्यश्चन्द्रमा इत्यत्र विद्यमानस्यैकचन्द्रमसो द्वितीयचन्द्रमसमन्तरेण सामान्यमपोह्यते एतदुक्तं भवति—सामान्यस्यानेकवृत्तित्वात्, अत्र चानेकत्वादर्शनात्सामान्यमात्रं निषिध्यते सामान्यप्रतिषेधेन। तथा 'विसेसपडिसेहओ'त्ति अत्रोदाहृतिः—न सन्ति घटप्रमाणा मुक्ताः, अत्रापि घटप्रमाणता नञा निषिध्यते, नान्यत्किञ्चित्, एतदुक्तं भवति—विद्यमानानामेव तासां घटप्रमाणलक्षणं विशेषमात्रं निषिध्यते, न तु तदस्तितेति विशेषप्रतिषेधेनेति, अतो नास्त्यात्मेति भणता क्वचित्संयोगमात्रं निषिध्यते, समवायमात्रं वा सामान्यमात्रं वा विशेषमात्रं वेति चतुर्द्धा गतिः?, किञ्चातः, तत्र क्वचिदलोकादौ संयोगमात्रेणायं नास्तीतिसिद्धं साध्यते, चोद्यं तु परिहरिष्यति, एवं नेह रूपादयः समवेतास्तन्तुषु पट इवेतीष्यत एवेति। सामान्यप्रतिषेधस्त्विहासंभवी, अनन्तजीवव्यक्तिसद्भावात्, तत्सद्भावस्य च सामान्याविनाभूतत्वाद्, अद्वैतपक्षस्य च निषेत्स्यमानत्वात्, विशेषप्रतिषेधोऽपीष्यत एव, अलोकाकाशात्मप्रमाणानभ्युपगमात्, प्रयोगश्चायम्—अस्त्यात्मा प्रतिषिध्यमानत्वाद् उक्तेन प्रकारेण घटवत् खरविषाणवद्वेति, व्यतिरेकेण शुकशुकेवेति, आह—एवं मत्रिलोकेश्वरताऽस्ति पञ्चमप्रतिषेधश्चेति, उच्यते—भवतोऽस्माभिस्त्रिलोकेश्वरतासंयोगमात्रनिषेधोऽभिधीयते, न तु सर्वथेश्वरताभावः, स्वच्छात्रवृन्देश्वरताऽभ्युपगमात्, अथवा भवति हि तत्समवायमात्रं निषिध्यते, तथा पञ्चमविशेषमात्रं निषि-

ध्यते, न त्वविशेषः, एतदुक्तं भवति–पञ्चमो निषिध्यते यथा दशहस्तः पुमान् गृहे वा देवदत्तः, अहमपि जीवमात्रं निराकरोमि, तद्वियुक्तस्तु देहोऽस्त्येवेति चेद् उच्यते, सामान्येनैवं, विशेषेण त्वध्यक्षविरोधः, आह–ननूक्तं भवतैव संयोगादिमात्रप्रतिषेधादिति, तन्न–नु संयोगादीनामसतां प्रतिषेधो, न तु सतां, एतदुक्तं भवति–गृहे देवदत्तस्यासतः संयोगो नास्ति, एवं खरे सतो विषाणस्य समवायो नास्ति, एवमभवत्सामान्यं निषिध्यते, तथाऽभवत्फलप्रमाणविशेषो निषिध्यते, तथा च सति यद्यात्मनोऽप्यभवतोऽहं निषेधं करोम्यतः किमुच्यते असकृत् सतो निषेधः ?, उच्यते, ननु निषेधविषया एव संयोगादयः खल्वसंतो य इमे भवतो मतिमोहमापादयन्ति, न त्वर्थान्तरविषयाः खल्विष्टिकामाणिक्यमृदुनिम्नादयो विधिविषयाः, ननु देवदत्तादिर्नास्ति, उच्यते, 'संयोगादी'त्यादि पश्चार्द्धं, यस्मात्संयोगसमवायसामान्यविशेषाः 'नियतं' निश्चितं अर्थान्तरे उद्यानगोमवालाभ्रादिषु सिद्धा एव, अतः सत एव प्रतिषेधो, नासत इति, किं नाद्यापि बुध्यस इति गाथार्थः ॥२०५३॥ तथा–'जीवो' इत्यादि ॥ 'अत्थो' इत्यादि ॥ जीव इत्येतत्पदं सार्थकं सगर्भं, शुद्धपदत्वाद्–असमासपदत्वाद् घटाभिधानवत्, तत्रैतत्स्याद्–अनैकान्तिको हेतुः, शून्यमित्यस्य शुद्धपदत्वेऽप्यनर्थकत्वात्, तन्न, व्युत्पत्तिमत्त्वे सत्येवं हेतुविशेषणस्येच्छया व्याप्तत्वात्, अन्यथा वेत्ति को नैतत् न्यायमार्गविचक्षणः, व्यतिरेकेण खरविषाणडित्थादिवचनवत्, देह एवास्यार्थो नार्थान्तरमिति, उक्तश्च–देह एवायमनुप्रयुज्यमानो दृष्टो यथैष जीवो, यथैनं न हिनस्ति, इत्यतो देह एवास्यार्थो युक्त इति, तच्च न, पर्यायवचनभेदात्, इह यत्र पर्यायवचनभेदस्तत्रान्यत्वं प्रतीयते, यथा घटाकाशयोः, तथा च घटकुटकुम्भादयो घटपर्यायाः नभोव्योमाम्बरादयश्चाकाशपर्यायाः, तथा च जीवशरीरयोः, तद्यथा–जीवः प्राणीत्येवमादि, तनुर्वपुरित्येवमादि, पर्यायवचनभेदेऽपि सर्वथैकत्वेऽभिधानसाङ्कर्यादिदोषापत्तिर्बाधकं, यत्पुनरिदमभ्यधायि 'यथैनं न हिनस्ती'ति तच्छ–

रीरसहचरणस्थानादितो जीवस्य शरीरे तदुपचारः, इदमपि चान्यदनुश्रूयते एव–गतः स जीवो दह्यतामिदं शरीरमिति । 'णाणादी'-त्यादि ॥ यतश्चायं ज्ञानादिगुणो भणितस्तस्मान्न देहोऽयमिति नास्यायमेवार्थः, मूर्त्तिमत्त्वाच्च घटवत्, तथा देहेंदियातिरित्तो विन्नाया तदुवलद्धी' त्यादि वक्तव्यमिति गाथार्थः ॥२०५४–५५॥ तदद्याप्यप्रतिबुध्यमाने गौतमस्वामिनि भगवानाह—

जीवोऽत्थि वओ सच्चं मव्वयणाओऽवसेसवयणं व। सव्वण्णुवयणओ वा अणुमयसव्वण्णुवयणं व ॥२०५६॥
भयरागदोसमोहाभावाओ सच्चमणइवाइं च । सव्वं चिय मे वयणं जाणयमज्झत्थवयणं व ॥२०५७॥
कह सव्वण्णुत्ति मई जेणाहं सव्वसंसयच्छेई । पुच्छसु व जं न जाणसि जेण व ते पच्चओ होज्जा ॥२०५८॥

'जीवो'इत्यादि ॥ जीवोऽस्तीति वचः सत्यं, मद्वचनत्वाच्छेषवचनवत्, यच्चासत्यं न तन्मद्वचनं, यथा कूटसाक्षिवचनं, सत्यं जीवोऽस्तीति वचः, सर्वज्ञवचनत्वाद्भवदनुमतसर्वज्ञवचनवत्, अनुमतं च तत्सर्वज्ञवचनं चानुमतसर्वज्ञवचनं, अत्रानुमतग्रहणं साभिप्रायकं, जैमिनिमनूपचर्याद्यासाभ्युपगमात् । तथा–'भये' त्यादि ॥ सर्वं मद्वचः सत्यमनतिपाति च भयरागद्वेषमोहरहितत्वात्, पथिज्ञस्याभयस्य प्रष्टुर्भयरागद्वेषवतः सत्पथोपदेशवचनवदिति गाथार्थः ॥२०५६–५७॥ भगवांस्तमारेकते–'कहे'त्यादि ॥ कथमहं सर्वज्ञो, न कथञ्चिदिति मन्यसे, ततश्चासिद्धं प्राग्हेतुद्वयमिति, उच्यते–जेण संसयच्छेत्ता, प्रयोगः–सर्वज्ञोऽहं सर्वसंशयच्छेदित्वात्, दृष्टान्ताभावतोऽनन्वयो नाम दृष्टान्तदोषः इति चेत्, तन्न, प्रत्यक्षत्वादविप्रतिपत्तेश्च किमत्रान्वयान्वेषणेन ?, प्रस्तावान्तरविषयत्वादन्वयान्वेषणस्य, न चेदेवमित्यत आह–'पुच्छे'त्यादि, स्पष्टम् । द्वितीयोऽपि हेतुर्नासिद्धः, तल्लिङ्गादर्शनात्, तल्लिङ्गादर्शने च न तदनुमितावतिप्रसङ्गो बाधा चेति, यच्चाभ्ययायि न चोपमानेनेति तत्कामं । अर्थापत्त्या तु प्रसंगतः प्रसाधित एव, स्वस्थानेऽपीच्छादेः बुद्धि-

पूर्वकत्वाद्, आत्मानमन्तरेण च तदभावात्, न च स्कन्धा एव प्रयत्नवन्तः, तेषां प्रतिक्षणभङ्गुरत्वादनुसन्धानाभावाद्, वासनाया अपि द्वयोर्वास्यवासकयोर्दर्शनात्, तिलमालतीपुष्पयोरिवेति ॥२०५८॥ अत आह—

एवमुवओगलिंगं गोयम ! सव्वप्पमाणसंसिद्धं । संसारीयरथावरतसाइभेयं मुणे जीवं ॥२०५९॥

जइ पुण सो एगो चिय हवेज्ज वोमं व सव्वपिंडेसु । गोयम ! तदेगलिंगं पिंडेसु तहा न जीवोऽयं ॥२०६०॥

नाणाजीवा कुंभादयो व्व भुवि लक्खणाइभेयाओ । सुहदुक्खबंधमोक्खाभावो य जओ तदेगत्ते ॥२०६१॥

जेणोवओगलिंगो जीवो भिन्नो य सो पइसरीरं । उवओगो उक्करिसावगरिसओ तेण तेऽणंता ॥२०६२॥

एगत्ते सव्वगयत्तओ न मोक्खादओ नभस्सेव । कत्ता भोत्ता मंता न य संसारी जहाऽऽगासं ॥२०६३॥

एगत्ते नत्थि सुही बहूवघाउत्ति देसनिरुउव्व । बहुतरबद्धत्तणओ न य मुक्को देसमुक्को व्व ॥२०६४॥

जीवो तणुमेत्तत्थो जह कुंभो तग्गुणोवलंभाओ । अहवाऽणुवलंभाओ भिन्नम्मि घडे पडस्सेव ॥२०६५॥

तम्हा कत्ता भोत्ता बंधो मोक्खो सुहं च दुक्खं च । संसरणं च बहुत्तासव्वगयत्तेसु जुत्ताइं ॥२०६६॥

'एव'मित्यादि सुखोन्नेयेति ॥ आह—'यदी'त्यादि । यदि पुनः संसार्यसंसारित्रसस्थावरादिभेदभिन्नो जीवसङ्घातः सर्वपिण्डेषु—सर्वमूर्त्तिमत्स्वेक एव स्याद् व्योमवत् क इव दोषः स्यात्, न चैतत्स्वाभिप्रायमात्रेण पृच्छयते, यत उक्तम्—"एक एव हि भूतात्मा, भूते भूते प्रतिष्ठितः । एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥१॥ यथा विशुद्धमाकाशं, तिमिरोपप्लुतो जनः । सङ्कीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥२॥ तथेदममलं ब्रह्म, निर्विकल्पमविद्यया । कलुषत्वमिवापन्नं, भेदरूपं प्रकाशते ॥३॥ ऊर्ध्वमूलमधःशाख-

मश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि, यस्तं वेद स वेदवित् ॥४॥ पुरुष एवेदग्निं सर्वं यद् भूतं यच्च भाव्यं उतामृतत्वस्ये-
शानो यदन्नेनातिरोहति यदेजति यन्नैजति यद्दूरे यदन्तिके यदंतरस्य सर्वस्य यदु सर्वस्यास्य बाह्यतः" इत्येवमादि, उच्यते, गौतम !
तद्व्योम एकलिङ्गं-एकस्वभावं पिण्डेषु-मूर्त्तिमत्सु भावेषु यथा तथा नायं जीवः सर्वपिण्डेष्वेकलिङ्ग इति गाथार्थः ॥२०५९-६०॥
प्रयोगः-'नाणे'त्यादि । भुवि नाना जीवाः लक्षणादिभेदात् कुम्भादय इव व्यतिरेकेण खं, यतश्च तदेकत्वे सुखदुःखबन्धमो-
क्षादेरभावः प्राप्नोति, नारकेन्द्रजीवयोरेकत्वात् तदभावः, संसारमुक्तजीवयोश्चैकत्वादेकभावः, चशब्दात्कर्त्रभाव इति गाथार्थः।२०६१।
कथं च लक्षणभेदः ? इत्यत आह-'जेणे'त्यादि । जीवो ह्युपयोगचिह्नः, स चोपयोगः प्रतितनु भिन्नोऽनुभूयते, कथं ?-उत्क-
र्षापकर्षदर्शनात्, तेन तद्भेदात्तेऽनन्ताः, उपयोगो नैकस्ततश्च जीवा अपि अनन्ता इति। प्राग्गाथापश्चार्द्धं व्याचिख्यासुराह-'एगत्ते'
इत्यादि । एकत्वे न सुखदुःखबन्धमोक्षाः सर्वगतत्वान्नभस इव, व्यतिरेकेणास्य देवदत्तः, न च सर्वजगत्सर्वैकत्वे कर्त्ता भोक्ता मन्ता
संसारी वा, अत एव हेतोस्तद्वत् । 'एगत्ते'इत्यादि । अपि चैकानेकत्वे मुक्तामुक्तजीवराशेरभ्युपगम्यमाने नत्थि सुहीति पक्षः, बहू-
पघातत्वाद्, यो यो बहुतरोपघातः स स न सुखी, यथा सर्वाङ्गावयवरोगावृतोऽन्यत्रैकाङ्गुल्यग्रमात्राद्, व्यतिरेकेण संनिहितसुख-
साधनसामग्रीको निरुजो देवदत्तः, न चात्मैकत्वे मुक्तः, बहुतरबद्धत्वात्, संसारिजीवापेक्षया, इह यो बहुतरबद्धो नासौ मुक्त इति
व्यवह्रियते, न चामुक्तः सुखमश्नुते, यथा सर्वाङ्गशीलितः पुमानन्यत्राङ्गुल्यग्रैकदेशात्, यश्च मुक्तो नासौ बहुतरोपनिबद्धो, न च स्व-
ल्पनिबन्धनो, यथाऽशीलितो विष्णुमित्र इति गाथार्थः ॥२०६२-६४॥ अपि चाद्वैतवादिन् ! 'जीव'इत्यादि ॥ त्वक्पर्यन्तदेहमात्रव्यापी
जीवः, तद्गुणोपलब्धेः, घटवत्, तन्मात्र इत्यर्थः, यश्च यत्रासन् न तस्य तत्र गुणोपलब्धिर्यथाऽग्नेरम्भसि, यद्वा तनुमात्रव्यापी जीवो

बहिस्तद्गुणानुपलब्धेः घटात्मनि पटवत्, यश्च यत्रास्ते न तस्य तत्र गुणानुपलम्भो, यथा स्वाकारे घटस्येति गाथार्थः ॥२०६५॥ 'तम्हा'इत्यादि । तस्मात्कर्तृत्वादयो बहुत्वासर्वगतत्वयोः सतोर्युक्ताः, तदेवं प्रमाणसिद्धमेवंविशिष्टं च गृहाण जीवमिति गाथार्थः ॥२०६६॥ यदा तु मन्यसे यद्यपि वेदपदविहितो जीवस्तथाऽपि पुनर्वाक्यान्तरेण बाधितत्वात्संशय एव मे श्रेयानिति, तदपि मा कृथाः, यतो वेदपदानामर्थं नैव जानासि त्वं, सम्यगर्थ एव विपरीतार्थप्रतिपत्तेः, कथं पुनरिदमेवं ?, अत आह भाष्यकारः—

गोयम ! वेयपयाणं इमाणमत्थं च तं न याणासि । जं विन्नाणघणो च्चिय भूएहिंतो समुत्थाय ॥२०६७॥

मण्णसि मज्जंगेसु व मयभावो भूयसमुदउब्भूओ । विन्नाणमेत्तमायाभूएऽणु विणस्सइ स भूओ ॥२०६८॥

अत्थि न य पेच्चसण्णा जं पुव्वभवेऽभिहाणममुगोत्ति । जं भणियं न भवाओ भवंतरं जाइ जीवोत्ति ॥२०६९॥

गोयम ! पयत्थमेवं मन्नंतो नत्थि मन्नसे जीवं । वक्कंतरेसु य पुणो भणिओ जीवो जमत्थित्ति ॥२०७०॥

अग्गिहवणाइकिरियाफलं च तो संसयं कुणसि जीवे । मा कुरु न पयत्थोऽयं इमं पयत्थं निसामेहि ॥२०७१॥

विण्णाणाओऽणण्णो विण्णाणघणोत्ति सव्वसो वाऽवि । स भवइ भूएहिंतो घडविण्णाणाइभावेणं ॥२०७२॥

ताइं चिय भूयाइं सोऽणु विणस्सइ विणस्समाणाइं । अत्थंतरोवओगे कमसो विण्णेयभावेणं ॥२०७३॥

पुव्वावरविण्णाणोवओगओ विगमसंभवसहावो । विण्णाणसंतईए विण्णाणघणोऽयमविणासी ॥२०७४॥

न य पेच्चनाणसण्णाऽवतिट्ठए संपओवओगाओ । विण्णाणघणाभिक्खो जीवोऽयं वेयपयभिहिओ ॥२०७५॥

एवंपि भूयधम्मो नाणं तब्भावभावओ बुद्धी । तं नो तदभावम्मिवि जं नाणं वेयसमयम्मि ॥२०७६॥

अत्थमिए आइच्चे चन्दे संतासु अग्गिवायासु। किंजोइरयं पुरिसो ? अप्पज्जोइत्ति निद्दिट्ठो ॥२०७७॥
तदभावे भावाओ भावे चाभावओ न तद्धम्मो। जह घडभावाभावे विवज्जयाओ पडो भिन्नो ॥२०७८॥
एसिं वेयपयाणं न तमत्थं वियसि अहव सव्वेसिं। अत्थो किं होज्ज सुई विण्णाणं वत्थुभेओ वा ॥२०७९॥
जाई दव्वं किरिया गुणोऽहवा संसओ तवाजुत्तो। अयमेवेति नवायं न वत्थुधम्मो जओ जुत्तो ॥२०८०॥
सव्वं चिय सव्वमयं सपरप्पज्जायओ जओ नियमं। सव्वमसव्वमयंपि य विचित्तरूवं विवक्खाओ॥२०८१॥
सामन्नविसेसमओ तेण पयत्थो विवक्खया जुत्तो। वत्थुस्स विस्सरूवो पज्जायावेक्खया सव्वो ॥२०८२॥
छिन्नम्मि संसयम्मी जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ पंचहिं सह खंडियसएहिं॥२०८३॥
एवं कम्माईसुवि जं सामण्णं तयं समाउज्जं। जो पुण एत्थ विसेसो समासओ तं पवक्खाभि॥२०८४॥

'गोयमे' त्यादि। 'मन्नसी'त्यादि। 'अत्थी'त्यादि। गौतम! इत्यामन्त्रणं 'वेदपदानां' श्रुतिवाक्यानां 'अमीषां' विवक्षितानां 'न य जाणासि'त्ति नैवावबुध्यसे, किमित्यत आह-'अर्थं' अभिप्रायं, किं कारणमित्याह-जं मन्नसित्ति संबन्धः, यस्मान्मन्यसे-यस्मादवबुध्यसे त्वं, किमित्यत आह-'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसञ्ज्ञाऽस्ती'ति, अस्य वाक्यस्यार्थ एवं, यदुत 'विन्नाणघणोच्चिय'त्ति, अस्य व्याख्या-पृथिव्यादिभूतविज्ञानलवसमुदायो विज्ञानघनः, पृथिव्यादिविज्ञानदेशानां पिण्डीभवनमितियावत्, अवधारणं त्वात्मनो भूतातिरिक्तस्य विज्ञानगुणाश्रयस्याभावोपदर्शनार्थं, एतेभ्यो भूतेभ्य इति पृथिव्यादिभ्यः अन्यथा जीवपर्यायवचनोऽपि भूतशब्दः श्रूयते, ततस्तेभ्यो मा भूत्, एतदुक्तं भवति-न जैनानामिवाने-

कसत्त्वसंघातघनो विज्ञानघनोऽभिगृह्यते वनस्पताविव, यदाहुः–"चक्राकं भज्यमानस्ये" (प्रज्ञा पद १) त्येवमादि, 'समुत्थाय' इति संभूय, अनेनाभूतविज्ञानप्रादुर्भावस्ते चेतसि विपरिवर्त्तते, पृथिव्यादिविज्ञानदेशानामपि समुदायनिमित्तपरिणामाङ्गीकरणं, न व्यस्तानामितियावत्, तान्येवानु विनश्यतीति तान्येव अनुविनश्यन्ति सत्यसावप्यनुम्रियते, न पुनरात्मवादिनामिव शरीरे विनश्यति समुत्थायान्यत्र यातीति, अत एवोच्यते–'न प्रेत्यसञ्ज्ञाऽस्ति' प्रेत्यभवो नाम नरकादिः, य एवायं प्रेत्य नारको देवो वाऽभवत् स मनुष्योऽधुना संवृत्त इत्येवं न भवाद्भवान्तरमस्तीत्युक्तं भवति, अतः–'गोयमे'त्यादि ॥ गौतम ! अमुं पदार्थं मन्यमानोऽस्य वाक्यस्य'मन्यसे' अवबुध्यसे 'जीव' आत्मा यदुत नास्ति भूताधिकः इत्येकमाशङ्कास्थानं, 'जं च पुणो' त्ति यद्–यस्माच्च पुनर्वाक्यान्तरेषु भणितः पुनरस्ति जीवः "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इति वचनात्, अग्निहवनफलश्रुतेश्च "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति वचनादिति । आह च–'अग्गी'त्यादि पुव्वद्धं कंठं । उच्यते–'मा कुरु' त्ति मा कृथाः संशयं, यतो न पदार्थोऽयमस्य, तस्मादमुं पदार्थं सम्यगर्थमस्य शृणु वक्ष्य इति गाथार्थः ॥२०७१॥ 'विन्नाणे'त्यादि ॥ विशिष्टं ज्ञानं विज्ञानं, ज्ञानदर्शनोपयोग इत्यर्थः, तस्माद्विज्ञानात् आत्माऽनन्य इतिकृत्वा विज्ञानघनः, 'सव्वसो वावि' त्ति यदिवा सर्वतः प्रतिप्रदेशमनन्तानन्तविज्ञानपर्यायसंघातघटितत्वाद्विज्ञानघन एवेति, एवशब्दाद्विज्ञानघन एवेति नियम्यते, विज्ञानघनानन्यत्वात्, अथवा शेषात्मधर्माणामपि सुखादीनां चेतोवृत्त्यविरोधात् विज्ञानघनान्तर्भावोपदर्शनार्थं सर्वात्मलिङ्गोपसंग्रहार्थं वा, स विज्ञानघनः 'भवति' उत्पद्यते 'भूतेहिंतो' त्ति 'भूतेभ्यो' घटपटकटरथाग्न्यादिभ्यो द्रव्येभ्यः सहकारिभ्यः, कथं भवतीत्याह–घटविज्ञानादिभावेन, 'किममूलं प्रवर्त्तत' इति वचनात् ॥ तान्येवानुविनश्यतीत्यस्यार्थः–'ताइं चिये'त्यादि ॥

स च विज्ञानघनस्तान्येव भूतान्यालम्बनभूतानि विनश्यन्ति सन्ति विनाशव्यवधानभाञ्जि सन्त्यावृतिभाञ्जि वा सन्ति 'क्रमशः' परिपाट्या 'विज्ञेयभावेन' नीलाद्यवबोधेन 'विनश्यति' व्येति, कदेत्याह–'अर्थान्तरोपयोगे' पीताद्यवबोधोत्पत्तौ सत्यां, आत्मना त्वजहद्वृत्तिरेवास्त इति, तथा ह्येक एवायं त्रिस्वभावस्थितिरिति, आह च–'पुव्वावरे'त्यादि गतार्था। 'न प्रेत्ये'त्यादि व्याचष्टे 'नय' इत्यादि ॥ न च प्रेत्यज्ञानसञ्ज्ञा' न च प्रगेतनी नीलादिविज्ञानसञ्ज्ञाऽवतिष्ठते 'संपओवओगाओ' त्ति वार्त्तमानिकपीताद्याकारोत्पत्ताविति, अर्थाद्विभक्तिपरिणतिः, एतद्विभिनत्वात्तस्याः, अतः 'विन्नाणे'त्यादि भावार्थकथनम् ॥ 'एवंपी'त्यादि ॥ स्याद् बुद्धिः– एवमपीति एतेभ्य इत्यनेन प्रकारेण भूतधर्मो विज्ञानघनः प्रसजति, विषयभावभावित्वादिति, तन्न, यतः 'तदभावेऽपि' विषयात्ययेऽपि विज्ञानं श्रुतावुक्तम् "अस्तमिते आदित्ये याज्ञवल्क्यः चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुषः ?, आत्मज्योतिः सम्राडिति होवाच" ज्योतिरिति ज्ञानमाह, आत्मैव ज्योतिरस्य सोऽयमात्मज्योतिर्ज्ञानात्मक इतियावत्, अतो न ज्ञानं भूतधर्मः, अमुमेवार्थमाह–'अत्थमिते'इत्यादि गातार्था ॥ इतश्च–'तद'इत्यादि ॥ न भूतधर्मो विज्ञानघनः, तदभावे भावात् तद्भावेऽपि चाभावात्, दृष्टान्तमात्रमाह–यथा घटस्य न पटो धर्मो, विपर्ययात्, प्रयोगः–विवक्षितधर्मिधर्म एव विज्ञानघनः, तद्भावभावित्वाद् घटरक्ततावद्, व्यतिरेकेण तु शून्यत्वमिति गाथार्थः ॥२०७८॥ 'एसिं'गाहा ॥ 'जाई'त्यादि ॥ एवममीषां गौतमेत्यादि, हे गौतम ! त्वं वेदपदानामर्थं न वेत्सि, अथवा सर्वेषामपि, यतोऽभिमन्यसे 'अत्थो एएसिं होज्ज किं श्रुतिः ?, किं वेदपदस्य शब्दपदमेवार्थो, यथा भेरीशब्दोऽयमित्येतावन्मात्रं, उत विज्ञानं, यथा भेरीशब्दो, घट इति वा, उत वस्तुभेदो यथा श्रुतिज्ञानानन्तरमूर्ध्वकुण्डलौष्ठायतवृत्तरूपाथ घट इति प्रत्ययः, उत जातिर्यथा गौरिति, उत द्रव्यं यथा दण्डी, उत क्रिया यथा धावतीति, उत गुणः यथा शुक्ल इति,

'इति' एवं तव संशय एतेषु, स चायुक्तः, वस्तुन एवमनवस्थानात्, कथमिति चेदुच्यते—'यतः' यस्माद् 'वस्तुधर्मः' वस्तुपर्यायः 'न युक्तः' न घटते, कथमित्याह—अयमेवैवं नैवायमिति चेत्येवं, किमिति चेदुच्यते—सर्वासर्वात्मकत्वाद्वस्तुनः, स्वपरपर्यायद्वारेण, वस्तुविशेषश्च शब्दस्तस्मान्न तद्धर्मावधारणं युक्तं, स्पष्टयन्नाह—'सव्वं चिय' इत्यादि ॥ 'यतो' यस्मात् 'नियतं' निश्चितं सर्वमेव वस्तु सर्वात्मकं, कयाऽपेक्षयेत्यत आह—स्वपरपर्यायापेक्षया, सामान्यापेक्षयेत्यर्थः, तथा सर्वं वस्तु असर्वमयमपि, विशेषविवक्षया, स्वपर्यायाऽपेक्षयेत्यर्थः, एवं विविक्तरूपं वस्तु, अनेकान्तव्यवस्थानादिति गाथार्थः ॥२०७९-८१॥ निगमयन्नाह—'सामन्ने'त्यादि ॥ तेन पदार्थो गर्भार्थो युक्तः, किंविशिष्टः ? इत्यत 'आह—विश्वरूपः' नानाकारः, स्वपरपर्यायापेक्षयेत्यर्थ इति गाथार्थः ॥२०८२॥ तदेवमपनीताशेषाशङ्क इन्द्रभूतिर्विस्मयमगमत्—अहो भगवान् सर्वज्ञ इति, दुरुक्तं प्राक् चिन्तितं भाषितं चासीत्, करोति च ममायमधुना नेत्रयोः शरच्छशीवोत्सवमिति निर्भिन्नग्रन्थिरवोचत्—भगवन् ! यद्यहं योग्यः, प्रव्रज्यायास्त्वयेक्षितः । मह्यं प्रदीयतामेषा, ततः का कालयापना ? ॥१॥ 'छिन्नम्मी'त्यादि पुव्वद्धं कण्ठ्यम् । 'सः' गौतमस्वामी 'प्रव्रजितः' पापाद् व्रजितः प्रव्रजितो—दीक्षां प्रतिपन्नः, किंविशिष्टः ? इत्याह—श्रमणः 'नासंयतः प्रव्रजती'ति वचनात्, किमेकाकी ?, नेत्याह—पञ्चभिः शतैः सह परिवृतः खण्डिकानां छात्राणां, अनेन तेषामन्ताद् अन्तानुयायिनं वर्द्धमानमाहेति गाथार्थः ॥ एकादशैतानि वादस्थानकानि भविष्यन्त्यत आह—'एव'मित्यादि ॥ अनेन जीवप्रसाधनेन कर्मादिष्वपि यत्तुल्यं तुल्ययोगक्षेमं तत् स्वधिया समायोज्यं, न तु साक्षादभिधास्यते. ग्रन्थगौरवभयात्, यः पुनर्यत्र कर्मादिद्वारे विशेषः संक्षेपतस्तं तु वक्ष्याम्येवेति गाथार्थः ॥२०८३-८४॥ 'जीवे'त्ति दारं ॥ पढमो गणधरो गओ ॥१॥

सुधासोदरसर्वज्ञागमशोधितान्तःकरणश्रीजिनभद्रगणिक्षमाश्रमणकृते
श्रीकोट्याचार्यक्रोडीकृते

**विशेषावश्यकभाष्ये प्रथमो भागः समाप्तः ॥**

आगमोदय समितिना ग्रंन्थो.

| | |
|---|---|
| नंदीसूत्र.... | २-४-० |
| अनुयोगद्वार | २-८-० |
| स्थानांग उत्तरार्ध | ४-०-० |
| भगवतीसूत्र तृतीयभाग | ३-४-० |
| विचारसार प्रकरण | ०-८-० |
| निरयावली सूत्र | ०-१२-० |
| विशेपावश्यक गाथा<br>विपयाकारादि क्रम | ०-५-० |
| गच्छाचार पयन्नो... | ०-६-० |
| धर्मबिंदु प्रकरण.... | ०-१२-० |
| विशेपावश्यक भाष्य मूल तथा टिकानुं गुजराती भाषान्तर भा. १ लो. | २-०-० |
| रायपसेणी.... | १-८-० |
| जैन फीलोसोफी . | १-०-० |
| योग ,, | ०-१४-० |
| कर्म | ०-१२-० |

श्रीमज्जैनसिद्धान्तवाचनाप्रकाशनकारिका

# श्रीमती आगमोदयसमितिः

स्थापनाः—श्रीमल्लीतीर्थे वीर सं० २४४१ माघशुक्लदशम्याम् ।

प्रति ६००

सं० १९७२

( आर्टन्डर भीकुजी बाबाजी. )

प्राप्तिस्थानः—

मास्तर विजयचंद मोहनलाल

शे० दे० ला० धर्मशाला, गोपीपुरा—सुरत.

शेठ दे० ला० जै० पु० फंडना ग्रंथो.

| | | |
|---|---|---|
| आनंद काव्य म० मौ० | ४ थुं | ०-१२-० |
| ,, ,, | ५ मुं | ०-१०-० |
| ,, ,, | ६ ठुं | ०-१२-० |
| श्राद्ध प्रतिक्रमण सूत्र.... | | २-०-० |
| सेन प्रश्न (प्रश्नोत्तर रत्नाकर)... | | १-०-० |
| आवश्यक टीप्पण . | | १-१२-० |
| जंबुद्वीप प्रज्ञप्ति सटीक उत्तरार्ध... | | २-०-० |
| श्रीपाल चरित्र संस्कृत.... | | ०-१४-० |
| सूक्त मुक्तावली | | २-०-० |
| प्रवचन सारोद्धार सटीक पूर्वार्ध.... | | ३-०-० |
| तंदुल वैयालीय पयन्नो सटीक... | | १-८-० |
| विंशति स्थानक पद्यबद्ध | | १-०-० |
| कल्पसूत्र सुबोधिका .. | | २-०-० |
| सुबोधा समाचारी .. | | ०-८-० |
| श्रीपाल चरित्र प्राकृत सावचुर्णिक | | १-४-० |